भवति। केशग्राहं युद्धचन्ते, केशेषु ग्राहम्, केशैर्ग्राहम्। हस्तग्राहम्, हस्तेषु ग्राहम्, हस्तैर्ग्राहम्। युद्धसंरम्भादत्यन्तं सन्निकृष्यन्ते इत्यर्थः॥

प्रमाणे च ॥ ५१ ॥

'तृतीयासप्तम्योः' इत्येव। प्रमाणम् = आयामः, दैर्घ्यम्। प्रमाणे गम्यमाने तृतीयासप्तम्योरुपपदयोर्धातोर्णमुल् प्रत्ययो भवति। द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति, द्व्यङ्गुले उत्कर्षम्, द्व्यङ्गुलेनोत्कर्षम्। त्र्यङ्गुलोत्कर्षम्॥

अपादाने परीप्सायाम् ॥ ५२ ॥

परीप्सा = त्वरा। परीप्सायां गम्यमानायामपादान उपपदे धातोर्णमुल् प्रत्ययो भवति। शय्योत्थायं धावति, शय्याया उत्थाय। एवं

पदमञ्जरी

तेन चानुकृष्टमुत्तरत्र नानुवर्त्तते इति न चोदनीयम्। *युद्धसंरम्भादिति*। कोपादिना मनःक्षोभपूर्वको वाक्कायविकारः = संरम्भः, युद्धार्थः संरम्भो युद्धसंरम्भः, अश्वघासादिवत्षष्ठीसमासः। *अत्यन्तं सन्निकृष्य युद्धयन्ते इत्यर्थ इति*। सन्निकर्षप्रतिपादनपरमेतत्केशग्रहणं भवतु, मा वा भूदिति॥

*प्रमाणे च*॥ *तृतीयासप्तम्योरित्येवेति*। अर्थानुवृत्तिप्रदर्शनमेतत्, न ह्येवंविधः शब्दः प्रकृतोऽस्ति। *द्व्यङ्गुलोत्कर्षमिति*। द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम्, 'तत्पुरुषस्याङ्गुलेः' इत्यच्समासान्तः, द्व्यङ्गुलेनोत्कृष्य परिच्छिद्येत्यर्थः। ह्रस्वाः खण्डाः = खण्डिकाः।

*अपादाने परीप्सायाम्*॥ *परीप्सा त्वरेति*। 'ञित्वरा सम्भ्रमे' घटादिः, 'घटादयः षितः', षित्त्वादङ्। *शय्योत्थायमिति*। 'उदः स्थास्तम्भोः' इति तिष्ठतिसकारस्य तकारः, पूर्ववच्चुक्। *अवश्यकर्त्तव्यमपीति*। अक्षिप्रक्षालनादिकम्।

न्यासः

समासत्तौ॥ युद्धसंरम्भादिति। संरम्भः = मनःसंक्षोभपूर्वको वाक्कायविकारविशेषः, युद्धाय संरम्भो युद्धसंरम्भः, तस्मादत्यन्तं सन्निकृष्यन्ते, प्रत्यासीदन्तीति यावत्॥

प्रमाणे च॥ प्रमाणमायाम इति। 'आयामस्तु प्रमाणं स्यात्' इति वचनात्। दैर्घ्यमिति प्रसिद्धतरार्थेन शब्दान्तरेण प्रमाणशब्दस्यैवार्थं स्पष्टीकरोति। द्व्यङ्गुलोत्कर्षमिति। द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम्, 'तत्पुरुषस्याङ्गुलेः' इत्यादिनाऽच्। तेन द्व्यङ्गुलेन खण्डिकाया दैर्घ्यं परिच्छिद्यते॥

अपादाने परीप्सायाम्॥ शय्योत्थायमिति। 'उदः स्थास्तम्भोः पूर्वस्य' इति

नाम त्वरते यदवश्यंकर्त्तव्यमपि नापेक्षते। शय्योत्थानमात्रमाद्रियते। रन्ध्रापकर्षं पयः पिबति। भ्राष्ट्रापकर्षमपूपान् भक्षयति।

परीप्सायामिति किम्? आसनादुत्थाय गच्छति॥

द्वितीयायां च॥ ५३॥

'परीप्सायाम्' इत्येव। द्वितीयान्त उपपदे परीप्सायां गम्यमानायां धातोर्णमुल् प्रत्ययो भवति। यष्टिग्राहं युध्यन्ते; यष्टिं ग्राहम्, लोष्टग्राहम्, लोष्टं ग्राहम्। एवं नाम त्वरते यदायुधग्रहणमपि नाद्रियते। लोष्टादिकं यत्किंचिदासन्नं तद् गृह्णाति॥

स्वाङ्गेऽध्रुवे॥ ५४॥

'द्वितीयायाम्' इत्येव। अध्रुवे स्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्णमुल् प्रत्ययो भवति। अक्षिनिकाणं जल्पति। भ्रूविक्षेपं कथयति।

अध्रुव इति किम्? उत्क्षिप्य शिरः कथयति।



पदमञ्जरी

*द्वितीयायां परीप्सायामित्येवेति*। 'अनुदात्तं पदमेकवर्जम्' इत्यत्रापि परीप्सा भवत्येव, कथम्? परिभाषेयम्, पदग्रहणं च परिभाषार्थम्। तेनोदात्तः स्वरितो वा यत्र विधीयते तत्र तत्समकालमेवैकमचं वर्जयित्वा परिशिष्टमनुदात्तं कर्त्तव्यम्, न विलम्बितव्यमिति॥

*स्वाङ्गेऽध्रुवे*॥ स्वाङ्गलक्षणं चतुर्थे वक्ष्यते—अद्रवं मूर्त्तिमदित्यादि। *अक्षिनिकाणमिति*। 'कण निमीलने' चुरादिर्निपूर्वः। *उत्क्षिप्य शिरः कथयतीति*। ननु च ध्रुवमिति नित्यमुच्यते—ध्रुवा द्यौर्ध्रुवा पृथिवीति यथा; अध्रुवमनित्यम्,

न्यासः

पूर्वसवर्णः, 'आतो युक्'। एवमित्यादिना परीप्सां दर्शयति। रन्ध्रापकर्षमिति। एवं नाम त्वरते यत् पात्रमपि नापेक्षते, स्तनरन्ध्रादेवापकृष्य मुखेन पयः पिबतीत्यर्थः। भ्राष्ट्रापकर्षमिति। एवं नाम त्वरते यद् भाजनमपि दीयमानं नापेक्षते, भ्राष्ट्रादेवापकृष्य हस्तेन भक्षयति॥

द्वितीयायाञ्च॥ स्वाङ्गेऽध्रुवे॥ स्वाङ्गलक्षणमद्रवादि चतुर्थं वक्ष्यति। अक्षिनिकाणमिति। 'कण निमीलने', चुरादिनिपूर्वः। यस्मिन्नङ्गे छिन्ने प्राणी न म्रियते तदध्रुवमिति। पाणिपादादिकम्। अध्रुवत्वं पुनस्तस्य जीवत्यपि प्राणिनि कदाचिदभावाद्।